॥ श्रीराघवेन्द्रस्तोत्रम् ॥

श्रीपूर्णबोधगुरुतीर्थपयोब्धिपारा कामारिमाक्षविषमाक्षशिरः स्पृशन्ती ।
पूर्वोत्तरामिततरङ्गचरत्सुहंसा देवाळिसेवितपराङ्घ्रिपयोजलग्ना ॥ १॥

जीवेशभेदगुणपूर्तिजगत्सुसत्त्व नीचोच्चभावमुखनक्रगणैः समेता ।
दुर्वाद्यजापतिगिळैर्गुरुराघवेन्द्रवाग्देवतासरिदमुं विमलीकरोतु ॥ २॥

श्रीराघवेन्द्रः सकलप्रदाता स्वपादकञ्जद्वयभक्तिमद्भ्यः ।
अघाद्रिसम्भेदनदृष्टिवज्रः क्षमासुरेन्द्रोऽवतु मां सदाऽयम् ॥ ३॥

श्रीराघवेन्द्रोहरिपादकञ्जनिषेवणाल्लब्धसमस्तसम्पत् ।
देवस्वभावो दिविजद्रुमोऽयमिष्टप्रदो मे सततं स भूयात् ॥ ४॥

भव्यस्वरूपो भवदुःखतूलसङ्घाग्निचर्यः सुखधैर्यशाली ।
समस्तदुष्टग्रहनिग्रहेशो दुरत्ययोपप्लवसिन्धुसेतुः ॥ ५॥

निरस्तदोषो निरवद्यवेषः प्रत्यर्थिमूकत्त्वनिदानभाषः ।
विद्वत्परिज्ञेयमहाविशेषो वाग्वैखरीनिर्जितभव्यशेषः ॥ ६॥

सन्तानसम्पत्परिशुद्धभक्तिविज्ञानवाग्देहसुपाटवादीन् ।
दत्त्वा शरीरोत्थसमस्तदोषान् हत्त्वा स नोऽव्याद्गुरुराघवेन्द्रः ॥ ७॥

यत्पादोदकसञ्चयः सुरनदीमुख्यापगासादिता-
सङ्ख्याऽनुत्तमपुण्यसङ्घविलसत्प्रख्यातपुण्यावहः ।
दुस्तापत्रयनाशनो भुवि महा वन्ध्यासुपुत्रप्रदो
व्यङ्गस्वङ्गसमृद्धिदो ग्रहमहापापापहस्तं श्रये ॥ ८॥

यत्पादकञ्जरजसा परिभूषिताङ्गा यत्पादपद्ममधुपायितमानसा ये ।
यत्पादपद्मपरिकीर्तनजीर्णवाचस्तद्दर्शनं दुरितकाननदावभूतम् ॥ ९॥

सर्वतन्त्रस्वतन्त्रोऽसौ श्रीमध्वमतवर्धनः ।
विजयीन्द्रकराब्जोत्थसुधीन्द्रवरपुत्रकः ।
श्रीराघवेन्द्रो यतिराट् गुरुर्मे स्याद्भयापहः ॥ १०॥

ज्ञानभक्तिसुपुत्रायुः यशः श्रीपुण्यवर्धनः ।
प्रतिवादिजयस्वान्तभेदचिह्नादरो गुरुः ।
सर्वविद्याप्रवीणोऽन्यो राघवेन्द्रान्नविद्यते ॥ ११॥

अपरोक्षीकृतश्रीशः समुपेक्षितभावजः ।
अपेक्षितप्रदाताऽन्यो राघवेन्द्रान्नविद्यते ॥ १२॥

दयादाक्षिण्यवैराग्यवाक्पाटवमुखाङ्कितः ।
शापानुग्रहशक्तोऽन्यो राघवेन्द्रान्नविद्यते ॥ १३॥

अज्ञानविस्मृतिभ्रान्तिसंशयापस्मृतिक्षयाः ।
तन्द्राकम्पवचःकौण्ठ्यमुखा ये चेन्द्रियोद्भवाः ।
दोषास्ते नाशमायान्ति राघवेन्द्रप्रसादतः ॥ १४॥

`ॐ श्री राघवेन्द्राय नमः '  इत्यष्टाक्षरमन्त्रतः ।
जपिताद्भावितान्नित्यं इष्टार्थाः स्युर्नसंशयः ॥ १५॥

हन्तु नः कायजान्दोषानात्मात्मीयसमुद्भवान् ।
सर्वानपि पुमर्थांश्च ददातु गुरुरात्मवित् ॥ १६॥

इति कालत्रये नित्यं प्रार्थनां यः करोति सः ।
इहामुत्राप्तसर्वेष्टो मोदते नात्र संशयः ॥ १७॥

अगम्यमहिमा लोके राघवेन्द्रो महायशाः ।
श्रीमध्वमतदुग्धाब्धिचन्द्रोऽवतु सदाऽनघः ॥ १८॥

सर्वयात्राफलावाप्त्यै यथाशक्तिप्रदक्षिणम् ।
करोमि तव सिद्धस्य वृन्दावनगतं जलम् ।
शिरसा धारयाम्यद्य सर्वतीर्थफलाप्तये ॥ १९॥

सर्वाभीष्टार्थसिद्ध्यर्थं नमस्कारं करोम्यहम् ।
तव सङ्कीर्तनं वेदशास्त्रार्थज्ञानसिद्धये ॥ २०॥

संसारेऽक्षयसागरे प्रकृतितोऽगाधे सदा दुस्तरे ।
सर्वावद्यजलग्रहैरनुपमैः कामादिभङ्गाकुले ।
नानाविभ्रमदुर्भ्रमेऽमितभयस्तोमादिफेनोत्कटे ।
दुःखोत्कृष्टविषे समुद्धर गुरो मा मग्नरूपं सदा ॥ २१॥

राघवेन्द्रगुरुस्तोत्रं यः पठेद्भक्तिपूर्वकम् ।
तस्य कुष्ठादिरोगाणां निवृत्तिस्त्वरया भवेत् ॥ २२॥

अन्धोऽपि दिव्यदृष्टिः स्यादेडमूकोऽपि वाग्पतिः ।
पूर्णायुः पूर्णसम्पत्तिः स्तोत्रस्यास्य जपाद्भवेत् ॥ २३॥

यः पिबेज्जलमेतेन स्तोत्रेणैवाभिमन्त्रितम् ।
तस्य कुक्षिगता दोषाः सर्वे नश्यन्ति तत्क्षणात् ॥ २४॥

यद्वृन्दावनमासाद्य पङ्गुः खञ्जोऽपि वा जनः ।
स्तोत्रेणानेन यः कुर्यात्प्रदक्षिणनमस्कृति ।
स जङ्घालो भवेदेव गुरुराजप्रसादतः ॥ २५॥

सोमसूर्योपरागे च पुष्यार्कादिसमागमे ।
योऽनुत्तममिदं स्तोत्रमष्टोत्तरशतं जपेत् ।
भूतप्रेतपिशाचादिपीडा तस्य न जायते ॥ २६॥

एतत्स्तोत्रं समुच्चार्य गुरोर्वृन्दावनान्तिके ।
दीपसंयोजनाज्ज्ञानं पुत्रलाभो भवेद्ध्रुवम् ॥ २७॥

परवादिजयो दिव्यज्ञानभक्त्यादिवर्धनम् ।
सर्वाभीष्टप्रवृद्धिस्स्यान्नात्र कार्या विचारणा ॥ २८॥

राजचोरमहाव्याघ्रसर्पनक्रादिपीडनम् ।
न जायतेऽस्य स्तोत्रस्य प्रभावान्नात्र संशयः ॥ २९॥

यो भक्त्या गुरुराघवेन्द्रचरणद्वन्द्वं स्मरन् यः पठेत् ।
स्तोत्रं दिव्यमिदं सदा नहि भवेत्तस्यासुखं किञ्चन ।
किं त्विष्टार्थसमृद्धिरेव कमलानाथप्रसादोदयात् ।
कीर्तिर्दिग्विदिता विभूतिरतुला साक्षी हयास्योऽत्र हि ॥ ३०॥

इति श्री राघवेन्द्रार्य गुरुराजप्रसादतः ।
कृतं स्तोत्रमिदं पुण्यं श्रीमद्भिर्ह्यप्पणाभिदैः ॥ ३१॥

इति श्री अप्पण्णाचार्यविरचितं
श्रीराघवेन्द्रस्तोत्रं सम्पूर्णम्
॥ भारतीरमणमुख्यप्राणान्तर्गत श्रीकृष्णार्पणमस्तु ॥